**Gaekwad's Oriental Series**
Published under the Authority of
the Maharaja Sayajirao University
of Baroda.

General Editor :
**B. J. Sandesara,**
M.A., Ph.D.

**No. CXXVIII**

कविचक्रवर्ति–जगदेकमल्ल–
प्रणीतः

# सङ्गीतचूडामणिः ।

# SAṄGĪTACŪḌĀMAṆI

## A work on Indian Music

BY

KAVICAKRAVARTI JAGADEKAMALLA

EDITED BY

PANDIT D. K. VELANKAR
Vyākaraṇālaṅkāra,
Sanskrit Mahāvidyālaya,
M. S. University of Baroda.

Published with the subsistence grant of the Sangeeta Natak Akadami,
NEW DELHI.

**ORIENTAL INSTITUTE,**
**BARODA**
**1958**

## FOREWORD

It gives me great pleasure to introduce to the students of Indian Music, the Saṅgīta-Cūḍāmaṇi of Kavi-Cakravartī Jagadekamalla edited from a single palm-leaf manuscript in malayālam script from the collection of the Oriental Institute, Baroda. The work is a valuable addition to our printed texts on ancient Indian music especially because it antedates the famous Saṅgīta-Ratnākara of Śārṅgadeva. Editing of such a rare text from a single manuscript was a difficult problem and Shri D. K. Velankar Shastri has rendered great service to the cause of Indian Music by doing so with remarkable acumen. Attention of scholars is especially invited to portions of the text dealing with Tālas and Rāgas which corroborate the above remarks.

The Sangeet Natak Akadami, New Delhi, was pleased to sanction a grant of Rs. 10,000/- in March, 1955 for the publication of the following six volumes on music, dance and dramatics, from MSS. preserved in this Institute. Accordingly the following works have been undertaken for publication in the Gaekwad's Oriental Series of the M. S. University of Baroda.

(1) Rāgatattvavibodha of Śrīnivāsa.
(2) Saṅgītacūdāmaṇi of Kavi-Cakravartī Jagadekamalla.
(3) Rasa-Kaumudī of Śrīkaṇṭha.
(4) Rāgamālā of Meṣakarṇa, Rāgamālā of Jīvarājadīkṣita and Rāgamālā of Śaṅkarṣaṇa.
(5) Nṛtyādhyāya of Aśokamalla.
(6) Vīṇā-lakṣaṇa of Kaviśārdūla Parameśvara.

Out of these Rāgatattvavibodha was published as No. 126 of the G. O. Series, and the Sangītacūḍāmaṇi is published here as No. 128 of the same series. The delay in publication is mainly due to the nature of the texts and manuscripts, often there being only one manuscript, as in the case of the present text.

I take this opportunity to express our thanks to the Sangeeta Natak Akadami for the generous grant given in order to enable us to publish these works.

B. J. Sandesara,
Director.

श्रीः ।

# अनुक्रमणिका ।

श्रीः ।

# प्रस्तावना ।

अनादिकालादारभ्यास्मिन् भारते वर्षे धर्मादिचतुर्विधपुरुषार्थसिद्धयर्थमनेकानि शास्त्राणि प्रवृत्तानि । तेष्वन्यतमं सङ्गीतशास्त्रं धर्मार्थकाममोक्षाणां सुलभमद्वितीयमतिरमणीयं च साधनमिति शास्त्रान्तरेभ्यो वरीवर्ति । सङ्गीतशास्त्रस्य धर्मसाधनत्वं "ब्राह्मणौ वीणागाथिनौ गायतः" (तै. ब्रा. ३-९-१४) इत्यादिश्रुतिभ्यः सिध्यति । अर्थसाधनत्वं देवतार्चनादिषु गीतादेः परिग्रहात् आसर्वज्ञसदाशिवादामूढपशु विगलितवेद्यान्तरतयाऽऽनन्दाविर्भावकत्वेन हृद्यत्वाच्च लोकतः सिद्धम् । कामसाधनत्वं "तस्माद्गायन्तं स्त्रियः कामयन्ते" इत्यादिश्रुतिवाक्येषु लोकेषु च सुप्रसिद्धम् । मोक्षसाधनत्वं चास्य शास्त्रस्य

वीणावादनतत्वज्ञः श्रुतिजातिविशारदः ।
तालज्ञश्चाप्रयासेन मोक्षमार्गं च गच्छति ॥

(याज्ञवल्क्यस्मृतिः ३-४-११५)

इति याज्ञवल्क्यस्मृतेः प्रतीयते ।

एवं चानायासेनातीव हृद्यतया च चतुर्विधपुरुषार्थसाधकमेतादृशं परमानन्ददायकं रमणीयं शास्त्रान्तरं नास्तीत्यस्य शास्त्रस्याध्ययनाध्यापनादिना प्रचारः सर्वत्र भारते संवृत्तः ।

शास्त्रस्याऽस्याध्ययनाध्यापनसौकर्यार्थं महर्षिभिराचार्यैश्च भूरिशो ग्रन्था निबद्धा अद्यापि निबध्यन्ते च । प्राचीनेषु ग्रन्थेषु बहवो ग्रन्थाः कालमहिम्ना नामशेषाः संवृत्ताः । अवशिष्टाः प्राचीनानामाचार्याणां विद्यारतिं प्रगाढं पाण्डित्यं शास्त्रपरिश्रमांश्च द्योतयन्तः स्थाने स्थाने ग्रन्थालयेषु संरक्षितास्तिष्ठन्ति । सङ्गीतशास्त्रस्याभिवृद्धयर्थं प्राचीनैराचार्यैर्निबद्धानां ग्रन्थानां संशोधनं प्रकाशनं चातीवोपकारकमिति बहुभिः पण्डितैः प्राचीना बहवो ग्रन्थाः प्रकाशिताः । तथाप्यवशिष्यन्ते बहवः । तेषां प्रकाशनमावश्यकमिति कृत्वाऽत्रत्ये प्राच्यविद्यामन्दिरग्रन्थालये विद्यमानः सङ्गीतचूडामणिनामकोऽप्रकाशितो ग्रन्थः प्रकाशयितु-मुपक्रम्यते ।

अस्य सङ्गीतचूडामणिग्रन्थस्य पाठनिर्धारणार्थं निम्नोक्त एक एव ग्रन्थ उपलब्ध उपयोजितश्च ग्रन्थान्तरस्यानुपलब्धेः । तथाहि । (१) ऑफ्रेचप्रणीते महति सूचिसागरे (Catalogus catalogorum) सङ्गीतचूडामणेर्ग्रन्थनिर्देशो नोपलभ्यते । (२) संशोधकवरेण्यानां गोडेमहोदयानामपि ग्रन्थस्यास्योपलब्धिस्थानं न ज्ञातमासीदिति तेषां "सङ्गीतचूडामणिस्तस्य समयश्च" इति निबन्धात् (Studies in Indian Literary History Vol. I. by P. K. Gode P. 211.) प्रतीयते । (३) अस्य ग्रन्थस्य केवलं प्रथमस्तालाध्यायो द्वितीयो रागाध्यायः पञ्चमो नृत्याध्यायश्च इदानीं समवाप्यन्ते इति रामकृष्णकविभिर्भरतकोशप्रस्तावनायामुक्तम् । परन्तु तैरुपलब्धिस्थानं न निर्दिष्टमिति तेषामयमुल्लेखो ग्रन्थान्वेषणार्थं नोपयुक्तस्तथापि तेषां सविधे ग्रन्थोऽयमासीदिति तैः स्थाने स्थाने निर्दिष्टेभ्यः सङ्गीतचूडामणि-ग्रन्थप्रमाणेभ्योऽध्यवसीयते । (४) आन्ध्रसाहित्यपरिषत्पुस्तकालये सङ्गीतचूडामणेरेको ग्रन्थो विद्यते

इति कृष्णमाचार्यैः संस्कृतवाङ्मयेतिहासे प्रोक्तम् । (*History of Classical Sanskrit Literature* P. 853 Para 1005) सोऽयं ग्रन्थो नास्माभिर्बताधिगतः । (५) अनूपसंस्कृतपुस्तकालये ग्रन्थोऽयं सङ्गृहीतस्तत्र प्रथमाध्यायः सम्पूर्णः । द्वितीयस्तु खण्डितो वर्तते । इति '**जगदेकमल्लकृतः सङ्गीतचूडामणिः**' इति निबन्धादवगम्यते । (Saṅgītacūḍāmaṇi of Jagadekamalla by K. Mādhava Kṛṣṇa Śarmā—The Indian Historical Quarterly, Culcutta, 1944. P. 87) अयमपि ग्रन्थो दुरासदः संवृत्तः ।

**ग्रन्थवर्णनम् ।**

१ वटोदरम् । प्राच्यविद्यामन्दिरम् । ग्रन्थाङ्कः ९८९२ । ताडपत्रात्मकः । मलयलिपिः । गीर्वाणभाषा मलयभाषा च मध्ये । पत्राणि ६६ । प्रतिपत्रं पङ्क्तयः ८ । प्रतिपङ्क्त्यक्षराणि ३०-३२ । दैर्घ्यम् ९ अङ्गुलिमितम् । परिणाहः—१ᶟ⁄₄ अङ्गुलिमितः । हस्ताक्षरं रुचिरम् । पत्राणि त्रुटितानि जीर्णानि च । चतुश्शतवत्सरेभ्यः प्राग्लिखितो भवेदिति प्रतीयते । अस्य प्रतिकृतिर्देवनागरीलिप्यां सुगृहीतनामधेयैर्नैकविधलिपिभाषादिकोविदैः पण्डितवरैर्व्यङ्कटरमणशास्त्रिभिरत्रैव वर्षत्रयादूर्ध्वं विहिता ।

**ग्रन्थकारः ।**

अस्य ग्रन्थस्य प्रणेता **कविचक्रवर्ती** कश्चित् । तथाहि ग्रन्थोपक्रमे प्रोक्तम् ।

श्रुतिस्वरग्रामसमग्ररागवर्णक्रमस्थानघनाभिरामम् ।<br>
**सङ्गीतचूडामणि**मात्मराज्यकल्पं विधत्ते **कविचक्रवर्ती** ॥

इति । ग्रन्थकारविषये किमपि निर्देशान्तरं समग्रेऽपि ग्रन्थे न समुपलभ्यते ।

श्लोकोऽयं जगदेकमल्लकृते (क्रै. श. ११३८–११५०) सङ्गीतचूडामणिग्रन्थे समुपलभ्यते । तथाहि

ईर्ष्यारोषकषायिताशयरमापादप्रणामप्रियो<br>
राधापीनपयोधराश्रयनभःप्रस्पर्धिवक्षःस्थलः ।

गोपीचित्तविनोदनव्यतिकरे गोपीकृतात्मा स्वयं<br>
देवानामपि देवतां स भवतां पुष्णातु विष्णुः सुखम् ॥ १ ॥

हंसीवामरनिम्नगातटगता यन्मूर्ध्नि विद्योतते<br>
तत्फुल्लत कुन्दरुचिप्रतानजविनी (?)रम्या हिमांशोः कलाः ।<br>
(फुल्लत्कुन्दरुचिप्रतानजयिनी रम्या हिमांशोः कला ।)

कर्ता विस्फुरदद्रिराजतनया नेत्रोत्सवानां भृशं<br>
स श्रेयांसि तनोतु वस्त्रिभुवनक्षेमङ्करः शङ्करः ॥ २ ॥

हरस्य देहार्धधरापि वामा कामस्य कामान् परिपूरयन्ती<br>
नारीषु साम्राज्यवशादिवासौ सिंहासनस्था वरदा सुगौरी ॥ ३ ॥

श्रुतिस्वरग्रामसमग्ररागवर्णक्रमस्थानघनाभिरामम् ।<br>
**सङ्गीतचूडामणिमात्मराज्यकल्पं विधत्ते कविचक्रवर्ती** ॥ ४ ॥

[1] मतङ्गभोजप्रमुखैः कृतं यद्देशीकृतं लक्ष्यविकीर्णरूपम् ।
तदेव गम्भीरमतिस्फुटार्थं करोति राजा जगदेकमल्लः ॥ ५ ॥

अयं सङ्गीतचूडामणिग्रन्थोऽतिविस्तृतः प्रमाणभूतश्चासीदिति स्मर्यते। तस्येदानीं तालरागनृत्ताध्यायाः समुपलभ्यन्ते प्रबन्धाध्यायो वाद्याध्यायश्च लुप्तः । अस्माद्बहवो लक्षणश्लोकाः सङ्गीतसमयसारे पार्श्वदेवेनोदाहृताः ।

अस्यैव जगदेकमल्लकृतस्य सङ्गीतचूडामणिग्रन्थस्य प्रकृतो ग्रन्थः खण्डितस्वरूप इति प्रतीयते । तत्र हेतवः—

१ प्रकृते ग्रन्थे प्रबन्धाध्यायोऽपूर्णः। भरतकोशे समुद्धृतानां बहूनां वचनानामत्राऽविद्यमानत्वात् ।

२ रागाध्याये रागनामधेयान्यत्र केवलं समुपलभ्यन्ते । रागलक्षणादिकं नास्ति । भरतकोशे यानि रागलक्षणानि जगदेकमल्लस्य समुपलब्धानि तानि टिप्पण्यां प्रदर्शितानि ।

३ वाद्याध्याये श्लोकत्रयमत्र दृश्यते ।

४ नृत्ताध्यायः सर्वथा नास्ति ।

५ तालाध्यायः सविस्तरो विद्यते ।

अयं जगदेकमल्लो अभिलषितार्थचिन्तामणिकारस्य सोमेश्वरस्य पुत्रःकल्याणनगरे (११३८-११५० क्रै. श.) राज्यं चकार इति ज्ञायते इतिहासग्रन्थेभ्यः ।

परमप्रामाणिकेन सङ्गीतरत्नाकरकारेण शार्ङ्गदेवेन सङ्गीतग्रन्थकाराणां नामावलौ "परमर्दी च सोमेशो जगदेकमहीपतिः" इत्यत्र जगदेकमहीपतिपदेन जगदेकमल्लस्य प्रमाणभूतग्रन्थकारत्वेन निर्देशः कृतः । निर्देशश्चायं सङ्गीतचूडामणिग्रन्थस्य सङ्गीतशास्त्रे महत्वं प्रख्यापयति ।

**ग्रन्थः ।**

अस्य ग्रन्थस्य पाठनिर्धारणार्थं उपरिनिर्दिष्ट एक एव ग्रन्थ आदर्शतया आसीत् । सोऽपि बहुषु स्थानेष्वशुद्धो लुप्ताक्षरो कीटभक्षितश्च । अत एव पाठनिर्णयकार्यं सङ्गीतमकरन्द–रत्नाकर–भरत–मतङ्ग–दत्तिल–समयसार-औमापतादिग्रन्थानां कविरामकृष्णसम्पादितभरतकोशस्य च साहाय्येन यथामति सम्पादितम् । शुद्धः पाठः स्थले स्थले कुण्डलीकृत्य प्रदर्शितः । विषमस्थलानि सम्यगवबोधार्थं टिप्पण्यादिभिः परिष्कृतानि । ग्रन्थस्याऽस्याऽतिप्राचीनत्वात् प्राचीनसङ्गीतसम्प्रदायस्य चोत्सन्नत्वात् अस्य ग्रन्थस्य संशोधने कियान् परिश्रम इत्यत्राऽस्मिन् शास्त्रे कृतभूरिपरिश्रमा विद्वांस एव प्रमाणम् ।

'गीतं वाद्यं च नृत्यं च त्रयं सङ्गीतमुच्यते' इति वचनानुसारेण प्रबन्धतालरागवाद्यनृत्ताध्यायैः समग्रस्य सङ्गीतशास्त्रस्य प्रतिपादनात् सङ्गीतचूडामणिः सङ्गीतग्रन्थानां चूडामणिरेवासीत् । प्रकृते ग्रन्थे भूयान् विषयो विलुप्तः । यावानवशिष्यते तस्य विमर्श इदानीं प्रस्तूयते ।

सङ्गीतं द्विधा मार्गो देशी इति । तत्र यद्यपि ग्रन्थकारेण देशेषु देशेषु नरेश्वराणां० इति श्लोके (सं.० चूडा० १३) देशीसङ्गीतलक्षणमेव प्रोक्तं तथापि देशीतालानां मार्गतालानां च प्रतिपादनात्

1. Saṅgītacūḍāmaṇi of Jagadekamalla by K. Mādhava Kṛṣṇa Śarmā—The Indian Historical Quarterly, Calcutta, 1944. P. 87.

*मार्गसङ्गीतस्यापि विचारः कृतः । ग्रन्थेऽस्मिन् प्रथममुपोद्घातः अनन्तरं प्रबन्धप्रकरणं तालप्रकरणं वाद्यप्रकरणं रागप्रकरणं चेति चत्वारि प्रकरणानि सन्ति ।*

एतादृशः प्रकरणविभागो ग्रन्थे शब्दतो यद्यपि नोपदर्शितस्तथापि तत्र तत्राऽस्माभिः प्रकरणविभागावबोधार्थं कुण्डलीकृत्य प्रदर्शितः ।

तत्रोपोद्घाते गीतमाहात्म्यं स्वरत्रैविध्यं नादस्वरूपं नादप्रकाराश्च निरूपिताः । नादस्थानानि श्रुतयः शुद्धा विकृताश्च स्वरास्तेषां कुलानि जातयो वर्णा द्वीपानि ऋषिः दैवतं छन्दांसि विनियोगाश्च ग्रामा मूर्च्छनास्ताना इत्यादिकं लुप्तं प्रतीयते । तथापि भरतकोशे कच्चिनी, कला, घना, चालनिका, चित्रा, नान्दी, बाला, मधुकरी, मागधी ( माधवी ), मात्रा, माला, मैत्रा, वर्तिका, विचित्रा, विजया, शाङ्र्गरवा, शिवा, सरघा, सुमुखी चेत्यादयः श्रुतयः, सप्तस्वराणां मन्त्रा वर्णा देवतानि रसाः स्थानानि ऋषयश्छन्दांसि ध्यानानि इत्यादिकं च जगदेकमल्लोक्तं प्रमाणतयोपन्यस्तं दृश्यते तस्मात् जगदेकमल्लेन प्रकरणमिदं सविस्तरमुपनिबद्धमित्यनुमातुं शक्यते ।

प्रबन्धप्रकरणे १०१ प्रबन्धानां नामान्येव परिगणितानि । लक्षणादिकं नास्ति । लक्षणादिभागोऽस्माद्ग्रन्थाल्लुप्तः । भरतकोशे प्रबन्धानां लक्षणानि समुपलभ्यन्ते ।
तथाहि—

वृत्तम्—

छन्दोऽनुसारितालेन ललितं येन केनचित् ।
स्वरैर्युक्तं वियुक्तं वा वृत्तं गायन्ति कोविदाः ॥

श्रीरङ्गः—

प्रस्तारेण स्वरादीनां यदि प्रान्ते पदादिकाः ।
रागैस्त्रिभिस्त्रिभिस्तालैः श्रीरङ्गः कथितस्तदा ॥

अभिनन्दः—

यः पाटैस्तेन्नकैर्युक्तः प्रयुक्तो गीतकोविदैः ।
अभिनन्दोऽभिनन्देन तालेनैष विभूषितः ॥

अङ्कध्वनिः । आमोदः । उमातिलकः । एकताली । एला । कन्दुकः । चतुर्मुखः । चतुष्पदी । चित्रकरणम् । झोम्पटः । डेङ्की । तेन्नकरणम् । द्विपदी । धटः । ध्वनिकुट्टिनी । पञ्चतालेश्वरः । पञ्चाननः । पाटकरणम् । मनोरमः । रागकदम्बकः । लोल्ली । विजयः । विजयश्रीः । विलम्भः (लम्भकः) । शरभलीलकः । श्रीविलासः । सिंहपदः । सिंहलीलः । सुदर्शनः । हर्षवर्धनः । इति । एतेषां लक्षणानि भरतकोशादवगन्तव्यानि विस्तरभयादत्र नोल्लिखितानि । एतावता प्रमाणजातेन मूलग्रन्थे १०१ प्रबन्धानां लक्षणानि भवेयुरिति कल्पयितुं शक्यते ।

तालप्रकरणे तालशब्दनिरुक्तिः, जाति-कला-मार्ग-ग्रह-लय-यति-प्रस्तारास्तालप्राणाश्च निरूपिताः। सङ्गीतमकरन्द-रत्नाकर-दर्पणादिषु १० तालप्राणाः प्रतिपादिताः । तेष्वस्मिन् ग्रन्थे कालः, क्रिया, अङ्गानि चेति प्राणत्रयं नास्ति । अनन्तरं १०१ एकोत्तरशततालानां नामानि परिगणितानि । अनुक्रमेण च लक्षणान्यपि प्रदर्शितानि । एते तालाः सङ्गीतमकरन्दे लक्ष्यलक्षणसहिताः समुपलभ्यन्ते । भरत-

नाट्यशास्त्रे ६० तालाः १०१ तालेषु मुख्यतयोक्ताः। आदिभरते भरतार्णवे च १०८ तालाः, सङ्गीतरत्नाकरे १२० तालाः प्रोक्ताः। तत्र क्रमेण सप्ततालानां एकोनविंशतितालानां चाधिक्यं विद्यते। सङ्गीतसमयसारसदृशेऽर्वाचीने ग्रन्थे १०१ ताला एव सङ्गृहीताः।

तदनु १०१ प्रबन्धतालाः सलक्षणं सङ्कीर्तिताः। एते औमापतेऽपि दृश्यन्ते।

ततश्चच्चत्पुटादयः पञ्च मार्गतालाः सप्रकारा लक्षिताः।

अनन्तरं चतुरस्र-त्र्यस्रजातितालाः सलक्षणं वर्णिताः। ततश्च प्रथमोक्तानां देशीतालानां केरलभाषयाऽनुवादः संगृहीतः। मार्गतालाद्देशीतालस्य वैषम्यं पण्डितेन चतुरकल्लिनाथेन

देशीतालस्तु लघ्वादिमितया क्रियया मतः।
यथाशोभं कांस्यतालध्वननादिकया मतः॥ ५-२३५

इति सङ्गीतरत्नाकरश्लोकव्याख्यायामुपपादितमिति तदेव व्याख्यानं अत्रोदाह्रियते।

"देशीतालस्त्वित्यादि। अत्र 'तु' शब्दो मार्गतालात् देशीतालस्य वैषम्यद्योतनार्थः। तच्च वैषम्यं '**यथाशोभं लघ्वादिमितया क्रियया मतः**' इति **यथाशोभं कांस्यतालध्वननादिकया मतः** इति च विशेषणद्वयेन द्रष्टव्यम्। अत्र **यथाशोभमिति** पदं देहलीप्रदीपन्यायेन काकाक्षिन्यायेन वोभयतो योजनीयम्। तत्र **यथाशोभं लघ्वादिमितयेत्यस्यायमर्थः**। अत्र शोभाशब्देन गीतावयवेषु तालावृत्तीनां कालसाम्यनिबन्धना सहृदयहृदयङ्गमोच्यते। तामनतिक्रम्येति यस्मिन् गीतावयवे यावदक्षरमितया मात्रया कांस्यतालसाम्यं भवति तत्र मार्गे पञ्चलघ्वक्षरोच्चारमिता मात्रा नियतत्वेन कथिता। क्वचित्तु ततोऽपि न्यूनया चतुर्लघ्वक्षरोच्चारमितया कालसाम्यम्। अन्यत्र तु ततोऽप्यधिकया षड्लघ्वक्षरोच्चारमितया। यत्र यथा शोभा भवति तामनतिक्रम्य। **लघ्वादिमितयेति**। आदिशब्देन गुरुप्लुतद्रुता गृह्यन्ते। अत्राल्पग्रहणे द्रुतादीति वा महद्ग्रहणे प्लुतादीति वा वक्तव्ये लघ्वादीति वचनं देशीतालेषु ग्रहणमोक्षयोर्लघोरेव प्राधान्यद्योतनार्थम्। तेन केवलद्रुतात्मकेऽपि ताले द्रुतद्वयं लघूकृत्य ग्रहमोक्षौ कुर्यादिति सम्प्रदायो वेदितव्यः। अत्रोक्तस्य मात्राप्रमाणभेदस्य तालविशेषनिष्ठत्वेनोदाहरणमुत्तरत्र तालानां पौनरुक्त्यपरिहारावसरे करिष्यते। **यथाशोभं कांस्यतालध्वननादिकयेति**। कांस्यतालध्वनने या शोभा क्वचिन्मुक्तनादत्वेन क्वचिद् गृहीतनादत्वेन क्वचिद् विघातेषु करक्रियाविशेषेण क्वचिद् विघाते घातकल्पनया च जायते। तां शोभामनतिक्रम्य कांस्यतालस्य ध्वननाद् विस्मयवैचित्र्यजनिताश्चर्यवान् मतो लोकसम्मत इति मार्गतालाद् वैषम्यं देशीतालस्य।"

ग्रन्थेऽस्मिन् दर्पण-मदन-निःसारुक-हंसलीलादितालानां लक्षणेषु नामभेदेऽप्यर्थभेदाभावात् अर्थपौनरुक्त्यं प्रतीयते तस्य परिहारः सप्रमाणं कल्लिनाथेन प्रतिपादित इति स एवात्र उपन्यस्यते। तथाहि।

इह पुनरुक्ततया परिगणितेषु कुडुक्कादितालेषु स्थितानां लघ्वादीनां देशीगतत्वेनाऽनियतप्रमाणत्वात् प्रमाणभेदेनापि स्वरूपभेदादर्थपौनरुक्त्याभावाददोष इति। ........... किञ्चित् क्वचिद् गीतादावेकस्यैव तालस्यावृत्तिषु प्रमाणभेदो दृश्यते। क्वचिदेकस्यामप्यावृत्तौ लघ्वादिष्वंशेषु प्रमाणभेदो दृश्यते। एतत्सर्वं देशीत्वस्य भूषणमेव न दूषणमिति देशीतालरहस्यमाचार्याभिमतमवगन्तव्यम्।

वाद्यप्रकरणं श्लोकत्रयात्मकमेव विद्यते । तत्र तत-विततादिवाद्यप्रकारा उपवर्णिताः ।

रागप्रकरणे स्वरसप्तकोद्धारो वर्णितः स च मतङ्गोक्तबृहद्देश्यामागमेषु च उपवर्णितो दृश्यते । ततो मध्यमादिरागादारभ्य शुद्धरागपर्यन्तं २९ रागाणां नामान्युक्तानि । ग्रन्थान्तरे शुद्धरागाः ३६ परिगणिताः । अत्र सप्त नामानि लुप्तानीत्यनुमीयते । ततश्च रागाणामुत्पत्तिरनुक्रान्ता । सापि श्लोकचतुष्टयादूर्ध्वं नोपलभ्यते । अनन्तरं रागरागिणीप्रस्तारः सविस्तरं उपवर्णितः । एतावदेव ग्रन्थस्य स्वरूपम् ।

भरतकोशे निम्नोक्तानां ९४ रागाणां लक्षणानि समुपलभ्यन्ते । अन्धाली-लिका । अवस्थान-वराटिका । आदिकामोदा । आभीरी । आम्रपञ्चमः । उत्पलिनी । कच्छोली । कम्भरीतिः । कर्णाटगौडः । कर्णाटबंगालः । काम्भोजी । कालिन्दी । कुन्तलवराटी । खसिका । गान्धारगतिका । गुण्डक्रिया । गुरुञ्जः । गुर्जरी । गोल्ली । गौडः । गौडी । घण्टारवः । छाया । छायातोडी । छायानट्टा । छायावेलावली । छोहारी । टक्कसैन्धवी । डोम्बक्रिया । तरङ्गिणी । तुरुष्कतोडी । तोडी । त्रिणेत्रकृतिः । दक्षिणगुर्जरी । दीपः । देवकृतिः । देशदेवालः । देशवालगौडः । देशाख्या । देशी । देशीहिन्दोलः । द्राविडगौडः । द्राविडवराटिका । धन्यासिका । ध्वनिः । नागध्वनिः । नाटनारायणी । नाटा । नादान्तरी । नीलोत्पलिनी । पुलिन्दी । पुन्नाटः । पौराली । प्रतापवराटिका । प्रतापवेलाउलिः । प्रथममञ्जरी । बृहद्दाक्षिणात्या । भम्माणी । भिन्नाभीरी । भुञ्जी । भैरवी । मध्यमादिः । मल्लारः । मल्लारिः । महाराष्ट्रगुर्जरी । मार्गहिन्दोलः । माहुरी । मेघरञ्जिका । रञ्जरीतिः । रामक्री । रीतिकैशिकी । लघुदाक्षिणात्या । ललिता । वराटिका । वेगरञ्जिका । वेलाधूलिः । शङ्कराभरणः । शाम्बरी । शुद्धबंगालः । शुद्धभाषा । शुद्धवराटी । श्रीकण्ठी । श्रीरागः । सालवाहनी । सिंहलीला । सैन्धववराटी । सैन्धवी । सोमरागः । सौराष्ट्रिका । सौराष्ट्री । स्वभावकृतिः । स्वरसैन्धवी । हस्तस्वरवराटिका । हर्षपुरी ।

जगदेकमल्लो भाषाङ्ग-क्रियाङ्गभेदेन लक्ष्ये दृष्टरागाणां १०१ एकोत्तरशतं सम्यङ् निरूपयामास इति संगीतसुधाकारेण रघुनाथभूपेनोक्तम् । अत्रानुक्तानां ७ सप्तरागाणां लक्षणानि गवेषणीयानि ।

रागाणां प्रातर्गेयाः सायंगेयाः प्रहरगेयाश्चेति विभागः प्रदर्शितः ।

प्रातर्गेया रागाः —

देशाक्षी भैरवी शुद्धा सालगाख्या च भैरवी ।
देवक्री रक्तहंसी च माहुरी रागरञ्जनी ॥
एते सूर्यांशतो जाताः सायंकाले तु निन्दिताः ।
प्रगायति प्रभाते यः स नरः सुखमेधते ॥

भरतकोशः । पृ. ४०५

सायंगेया रागाः —

शुद्धनट्टा सालगा च नाटा शुद्धवराटिका ।
वराटिका द्राविडी च देशी नागवराटिका ॥
छायावराटिका च स्यादाहर्यन्धालिका मता ।
मल्लारिका तदा छाया गौडी कर्णाटिकाह्वया ॥
गौडो मालवगौडश्च रामक्री रीतिरुत्तरा ।
छाया रामकृती रङ्गछाया स्वरवराटिका ॥

कर्णाटाङ्ग( य )बङ्गालसहिताश्चन्द्रमोंऽशुजाः ।
सायमेते प्रगातव्यास्तस्य श्रीरतुला भवेत् ॥
एतान्प्रातः परित्यज्ये ( जेत् ) वृद्धिकामीह मानवः ।
अनिरुक्ते तु रागाणां न वेलानिर्णयः क्वचित् ॥

भरतकोशः । पृ. ५२०

प्रहा( ह )रगेया रागाः—

प्रहा( ह )रैकोदयादर्वाक् प्रहा( ह )रैकोदयोपरि ।
देशाक्षी भैरवी शुद्धा सालगा च प्रगीयते ॥
वराटिका तथा शुद्धा द्राविडी नागसंज्ञका ।
प्रहा(ह)रोपरि गातव्या मल्लारी शाबरी तथा ॥
अन्धालिका रामकृतिश्छायानट्टा गुरुञ्जिका ।
मध्याह्नात्परतो गेया गौडरागाणि यानि च ॥
त्रियामोपरि गातव्या शुद्धसालगनाटिका ।

भरतकोशः । पृ. ४०४

भरतकोशे जगदेकोक्तं प्रसन्नादिः प्रसन्नान्तः इति वर्णालङ्कारद्वयमुपन्यस्तम् । आवर्तः—कोकिलः—चक्राकारः—जवः—निर्दोषः—पद्माकारः—महावज्रः—वारिदः—सदानन्दः—सीरः इत्येते वर्णालङ्काराः प्रतापसिंहप्रोक्ताश्चोल्लिखिताः । जगदेकमल्ल एव स्वकीये ग्रन्थे बहुषु स्थलेषु प्रतापपृथिवीभुजा इति पदेन आत्मानं विशिनष्टि । अतः स एवायं प्रतापसिंह इति भाति ।

अस्य सङ्गीतचूडामणेः प्रमाणतयोपन्यासः भरतशास्त्रग्रन्थे तालपदिकायां सङ्गीतसमयसारे नैषधीयचरितकाव्यस्य विद्याधरीटीकायां च दृश्यते इति डॉ० गोडे महोदयानां सङ्गीतचूडामणिस्तस्य समयश्चेति निबन्धाज्ज्ञायते । तेन तस्मिन् काले ग्रन्थोऽयं विद्वद्भिरपि अतिप्रमाणतया परिगृहीत आसीत् । एते चोपन्यासाः सङ्गीतशास्त्रग्रन्थेषु अस्य ग्रन्थस्य महत्वद्योतनाय पर्याप्ता इत्यलमतिपल्लवितेन ।

अस्मिन् ग्रन्थसम्पादनकार्ये सम्प्रति रामायणविभागाध्यक्षैः प्राच्यविद्यामन्दिराध्यक्षचरैः श्रीमद्भिर्गोविन्दभट्टमहोदयैरादित एव महत् साहाय्यमाचरितमिति तेषां सर्वथाऽधमर्णोऽस्मि । प्राच्यविद्यामन्दिराध्यक्षैः श्रीमद्भिः डॉ. भोगीलाल सांडेसरामहोदयैः तथैव साहाय्यपरम्परयाऽनुगृहीतोऽहमिति तेऽतीव धन्यवादार्हाः । उपाध्यक्षैः श्रीमद्भिः डॉ. उमाकान्त शाह महोदयैर्ग्रन्थसम्पादनार्थं पुस्तकादिप्रदानेन अनेक सूचनादिभिश्च बहुश उपकृतोऽस्मीति तेऽप्यतीव धन्यवादार्हाः । विद्वद्वर्यैर्वेङ्कटरमणशास्त्रिभिस्तथा न्यायभूषण-साहित्यशिरोमणिभिः श्रीमद्भी राघवन् नम्बियारमहोदयैः मलयलिपिलिखितस्याऽस्य ग्रन्थस्य पाठनिर्णयार्थं नैकशः साहाय्यमाचरितमिति तेषामुपकारा न कदापि विस्मर्तुं शक्यन्ते । अन्ते च मुद्रणालयव्यवस्थापकैः श्रीमद्भी रमणलाल पटेल महाशयैर्ग्रन्थस्यास्यातिक्लेशावहं मुद्रणकार्यमपि अतिरुचिरं सम्पादितमिति तेऽपि भूरिशो धन्यवादमर्हन्ति ।

छिपवाड, अकोलकर-वाडा,
वटोदरम् । ता. ५-६-१९५८.

दत्तात्रेय काशीनाथ वेलणकर

श्रीः ।

# सङ्गीतचूडामणिः ।

हरिः ( ॐ )

**श्रीगणपतये नमः ।**

**अविघ्नमस्तु ।**

देवः स द्विरदाननोऽस्तु भवतामिष्टार्थसंसिद्धये
निःसाधारणभक्तियुक्तमनसां विघ्नौघशान्तिप्रदः ।
यस्याऽऽभाति विलोलकर्णयुगलत्रस्ता कलक्वाणिनी
भृङ्गाली मदडिण्डिमध्वनिरिव व्यापारयन्ती पुरः ॥ १ ॥

श्रुतिस्वरग्रामसमग्ररागवर्णक्रमस्थानघनाभिरामम् ।
**सङ्गीतचूडामणि**मात्मराज्यकल्पं विधत्ते **कविचक्रवर्ती** ॥ २ ॥

**( अथ देशीसङ्गीतलक्षणम् । )**

देशेषु देशेषु नरेश्वराणां कुर्याज्जनानामपि वर्तते ( वर्तनं ) या ।
गीतं च वाद्यं च तथा च नृत्तं ( नृत्यं ) देशीति नाम्ना परिकीर्तिता सा ॥ ३ ॥

**( अथ गीतमाहात्म्यम् । )**

गीतस्यानुगतं वाद्यं नृत्तं ( नृत्यं ) वाद्यानुगामि यत् ।
तस्माद् गीतस्य मुख्यत्वं प्रशंसन्ति मनीषिणः ॥ ४ ॥

श्रीविष्णुरूपः खलु सामवेदस्तस्मात्समुत्पन्नमिदं हि गीतम् ।
तद्देवतानां पुरतः प्रगीतं भक्त्या बुधाः स्वर्गदमामनन्ति ॥ ५ ॥

पुरुषस्येन्द्रियाणां च महाभूतगणस्य च ।
गीतेनानवगीतेन जायते प्रीतिरुत्तमा ॥ ६ ॥

पुरुषे प्रीणिते साक्षात् प्रीणितः पुरुषोत्तमः ।
कर्ता पालयिता हर्ता भुवनत्रितयस्य सः ॥ ७ ॥

इन्द्रियप्रीणनात् प्रीतं स्यान्महाभूतपञ्चकम् ।
पृथिव्यां प्रीणितायां तु प्रीणिताः पर्वतादयः ॥ ८ ॥

अप्सु प्रीतासु सर्वासु तोषिताः सागरादयः ।
तेजसि प्रीणिते प्रीता भवेयुर्भास्करादयः ॥ ९ ॥

तोषिते मारुते सम्यक् प्राणिनः प्रीतिमाप्नुयुः ।
आकाशे प्रीणिते प्रीतं जगत्स्थावरजङ्गमम् ॥ १० ॥

योगध्यानादिकं यस्मात् सर्वलोकानुरञ्जनम् ।
तस्मादनन्तफलदं गीतं स्याद् भुक्तिमुक्तिदम् ॥ ११ ॥

संसारे सारभूतं यच्छ्रवणामृतमुत्तमम् ।
न वेत्ति गीतं यो मूढस्तस्य जन्म निरर्थकम् ॥ १२ ॥

**( अथ स्वरत्रैविध्यम् । )**

सप्तस्वरात् क्रमात् गीतं स्वरास्ते त्रिविधा मताः ।
सचेतनोद्भवाः केचित् केचिन्निश्चेतनोद्भवाः ॥ १३ ॥
उभयप्रभवाः केचिन्मुख्यास्तेषु शरीरजाः ।

**( अथ नादस्वरूपम् । )**

शरीर( रा )ना( न्ना )दसंभूतिर्गीतं नादात् प्रवर्तते ॥ १४ ॥

नादो बिन्दुः स्वरा रागाः संभवन्ति शरीरतः ।
स्वरो गीतं च वाद्यं च तालश्चेति चतुष्टयम् ॥ १५ ॥

न सिध्यति विना नादं तस्मान्नादात्मकं जगत् ।
अग्निमारुतयोर्योगा( गाद् ) भरे( वे )न्नादस्य सम्भवः ॥ १६ ॥
बिन्दुरुत्पद्यते नादान्नादान्निखिलवाङ्मयम् ।

**( अथ नादशब्दनिष्पत्तिः । )**

नकारः प्राण इत्युक्तो दकारो बह्निरुच्यते ॥ १७ ॥

अर्थोऽयं नादशब्दस्य सङ्केतात् परिकीर्तितः ।
स च पञ्चविधो नादो **मतङ्ग**मुनिसम्मतः ॥ १८ ॥

**( अथ नादप्रकाराः । )**

अतिसूक्ष्मश्च सूक्ष्मश्च पुष्टोऽपुष्टश्च कृत्रिमः ।
अतिसूक्ष्मो भवेन्नाभौ हृदि सूक्ष्मः प्रकाशते ॥ १९ ॥

पुष्टोपि युज्यते कण्ठे त्वपुष्टि( ष्ट )श्शिरसि स्मृतः ।
कृत्रिमो मुखदेशे तु स्थानदेनन ( भेदेन ) भासते ॥ २० ॥

॥ श्रीः ॥

॥ श्रीः ॥

## ( अथ प्रबन्धप्रकरणम् । )

एक एव प्रबन्धश्चेत् प्रकीर्णो वर्ज्य( र्ण्य )ते बुधैः ।
उद्देशस्तु प्रबन्धानामधुना क्रियते मया ॥ २१ ॥

प्रथमं( मो ) मातृकाख्यः स्यात् पञ्चतालेस्व ( श्व )रा ( र ) स्ततः
गद्यं वृत्तं दण्डकः स्यादार्या कन्दस्ततः परम् ॥ २२ ॥

हयलीलेभलीला च विजयो हरिपूर्वकः ।
ततः क्रौञ्चपदाभिख्यः कलहंसस्ततो भवेत् ॥ २३ ॥

ततः सिंहपदञ्च( श्च )कवालश्च जयमालिका ।
सिंहविक्रमनामाथ कथिता स्तवमञ्जरी ॥ २४ ॥

गाथा द्विपथकश्चैव मल्लिका द्विपदी थ( घ )टः ।
चर्चरी बन्ध( द्ध )नी चैव ततः प्रोक्ता चतुष्पदी ॥ २५ ॥

वस्तुनामप्रबन्धस्य करणं स्वरपूर्वकम् ।
ततश्च पाटकरणं बन्धारयं ( ख्यं ) करणं ततः ॥ २६ ॥

अन्यत्स्वरपदाख्यं च करणं परिकीर्तितम् ।
तथान्यच्चित्रकरणं करणं तेन्न ( न ) पूर्वकम् ॥ २७ ॥

करणं मिश्रपूर्वं च वर्तन्यथ विवर्तनी ।
स्वरार्थ एला ढोकी ( ढेङ्की ) च तथैव ध्वनिकुट्ट( ट्टि )नी ॥ २८ ॥

डों( झों )बडो लाभको ( लम्भको ) रासश्चैकताल्यङ्कता ( चा ) र( रि )णी ।
चतुरंग ( रङ्गः ) स्वराङ्गश्च त्रिभङ्गिस्तु विचित्रकः ॥ २९ ॥

ततो रागकदम्बः स्यात् भवेत्तालार्णवस्ततः ।
रससन्दोहसंज्ञश्च मण्डनश्च चतुर्मुखः ॥ ३० ॥

ततः स्याद्वर्णसरकस्ततो हरविलासकः
*पञ्चहस्तिस्ततः प्रोक्तः ततः पञ्चानको ( नो )भवेत् ॥ ३१ ॥

श्रीरङ्गो गदितस्तस्माद् उमातिलकनामकः ।
स्यात् श्री ( च्छ्री ) विल( ला )सःशरभलीलोऽन्यर्सिंहलीलकः ॥ ३२ ॥

विजयश्च जयश्रीश्च तथान्यो हर्षवर्धनः ।
श्रीवर्धनः प्रतापादिवर्धनोऽथ मनोरमः ॥ ३३ ॥

प्रमोदश्च ततोऽप्यन्यौ द्वौ सुदर्शनकन्दुकौ ।
आमोदोऽकन्धुश्चैव ( ङ्कध्वनिश्चैव ) ततस्त्रिपथकाभिधः ॥ ३४ ॥

अभिनन्दः शुकः शारी रणरङ्गोऽथ नन्दनः ।
हंसलीलोऽथ वर्णः स्यात् सिंहविक्रान्तसंज्ञकः ॥ ३५ ॥

शुकचञ्चुचै( श्चै )कपादो नत्त( र्त )नस्तदनन्तरम् ।
वीरश्रीर्नत्त( वर्त )नानन्दो ललितो हंसकः( तः ) पदम् ॥ ३६ ॥

नन्दश्च मङ्गलाचारो धवलो मङ्गलाभिधः ।
वदनो( नः )त्सबन्धा( संपडा )ख्यश्च चर्या राहसिका ( रासकिका ) तथा ॥३७॥

नि( त्रि )पदी षट्पदी चैव मोळ( ल ) ( ट्ट )श्चो( ट्टो घो )ल्लरिका तथा ।
मो( लो )ल्लिर्दन्तीति वस्तूनामुक्तमेकोत्तरं शतम् ॥ ३८ ॥

**( अथ मातृकाप्रकाराः )**

दिवा( व्या ) च मानुषी चान्या दिव्यमानुषिका व( प )रा ।
दिव्या संस्तुतया वाचा दिव्यैस्तालैर्विभूषिता ॥ ३९ ॥

मानुषी प्राकृतोक्त्यैव तालैर्देशीगतैर्भवेत् ।
भाषावैचित्र्यसंयुक्ता देशी या दिव्यमानुषी ॥ ४० ॥

मार्गदेशीगतैस्तालैर्मातृका परिगीयते ।
वेदान्तसिद्धान्तसमस्तमन्त्रं( न्त्रा )गन्धर्ववृन्दैः सह नारदाद्यैः ।
वेदाश्च सर्वे परितोषभाजो भवन्ति गीते खलु मातृकायाः ॥ ४१ ॥

पञ्चभङ्गी इति पाठः पञ्चहस्तिः इत्यपेक्षया साधुः । रत्नाकरेऽपि अयमेव पाठोऽस्ति ।

श्रीः ।

## ( अथ तालप्रकरणम् । )

विष्णुं लोकगुरुं प्रणम्य शिरसा सन्मार्गसन्दर्शकं
कीर्तिप्रीतिकरं जनस्य लघुना कामेन कामप्रदम् ।
सेव्यं स्याद्यतिभिर्द्रुतप्लुतपदन्यासाप्तलोकत्रयं
तालानां कथयामि लक्षणमहं पूर्वोक्तशास्त्रक्रमात् ॥ ४२ ॥

## ( अथ तालशब्दनिष्पत्तिः । )

तालशब्दस्य निष्पत्तिः प्रतिष्ठार्थो( र्थे )न धातुना ।
गीतं वाद्यं च नृत्तं ( त्यं ) च भाति ताले प्रतिष्ठितः ( तम् ) ॥ ४३ ॥

## ( अथ तालप्राणाः । * )

तालः कालस्य यन्मानं मापा—( मात्राजं ) हि क्रियाकृतम् ।

## ( अथ जातयः । )

त( च )तुरश्रस्ततस्त्र्यश्रो मिश्रः खण्डाभिधस्तथा ॥ ४४ ॥

चतुर्विधो भवेत्तालस्तत्स्वे( स्व )रूपं निरूप्यते ।
तत्र चच्चत्पुटः प्रोक्तश्चतुरश्रो( स्रो ) मनीषिभिः ॥ ४५ ॥

स त्रिधैककलः पूर्वं( र्वो ) द्विकलश्च चतुष्कलः ।
तथा चाचपुटस्त्र्यश्र( स्र )स्तस्य भेदा भवन्ति षट् ॥ ४६ ॥

गुरुत्रयात् समारभ्य द्विगुणं द्विगुणं क्रमात् ।
यावत् षण्णवतिस्तस्मिन्नेवं षड्भेदकाः क्रमात् ॥ ४७ ॥

युग्मौजमिश्रणामिश्रस्तालः प्रोक्तो विचक्षणैः ।
विश्लिष्टो( ष्टै र )प्यव( वि )श्लिष्टैस्तालाङ्गैर्य( र्यो ) द्रुतादिभिः ॥ ४८ ॥

---

* कालो मार्गः क्रियाङ्गानि ग्रहो जातिः कला लयः ।
यतिः प्रस्तारकश्चेति तालप्राणा दश स्मृताः ॥ सं. दर्पणम् श्लो. ६३१.

क्रियते बहुभङ्गीभिः स तालः खण्डसंज्ञकः ।

**( अथ मात्रालक्षणम् । )**

लघ्वक्षराणां पञ्चानां मानमुच्चारणे हि यत् ॥ ४९ ॥

तत्प्रमाणा परिज्ञेया मात्रा तालगता बुधैः ।
........( कला च ) सर्वमाख्योय( सैव मार्गे या ) ध्रुवशब्देन चोच्यते ॥५०।

**( अथ मार्गाः । )**

दक्षिणो वार्तिकश्चित्रस्ततश्चित्रतरो मतः ।
तथा चित्रमत( तम )श्च स्यादतिचित्रतमो( मः ) परः ॥ ५१ ॥

षडेवं कथिता मार्गास्तत्स्वरूपं निरूप्यते ।
अष्टमात्र ( त्रा ) कला ज्ञेया मार्गे दक्षिणसंज्ञके ॥ ५२ ॥

वार्तिके स्या( स्याच्च )चतुर्मात्रा कला चित्रे द्विचि( मा )त्रिका ।
मात्रा चित्रतरे च स्यादर्धा चित्रतमे ततः ॥ ५३ ॥

अतिचित्रतमे मार्गे कला तु द्रुतसंज्ञिता ।

**( अथ ग्रहाः । )**

ग्रहस्त्रिधा समोऽतीतस्तथाऽनागत इत्यपि ॥ ५४ ॥

गीते वाद्ये च नृत्ते( त्ये ) च............( सममेव ) प्रवर्तते ।
यस्तालः स च विज्ञेयः समग्रहसमाह्वयः ॥ ५५ ॥

किञ्चिद्गीते समारब्धे वाद्ये नृत्तेऽथवा पुनः ।
ग्रहणं यत्र तालस्य सोऽतीतग्रह इष्यते ॥ ५६ ॥

योऽलंकारेण गीते स्यात् तकारेण च वादने ।
नृत्येऽङ्गवर्त्तनैस्सार्धं स तालोऽनागतग्रहः ॥ ५७ ॥

**( अथ लयः । )**

तालान्तरालवर्त्ती यः कालोऽसौ लयनाल्लयः ।
त्रिविधः स च विज्ञेयो द्रुतो मध्ये( ध्यो ) विलम्बितः ॥ ५८ ॥

## ( अथ यतिः । )

लययानयतिः सम्यक् कथित( ता )**दत्तिवा( ला )**दिभिः
समा स्रोतोवहाख्या च गोपुच्छा चेति सा त्रिधा ॥ ५९ ॥

## ( अथ प्रस्तारः । )

प्रस्तारे( ता )लसम्बन्धि ह्यक्षरः( रं )स्याच्चतुर्विधः( धम् ) ।
संज्ञया तत्परिज्ञेयं द्रुतं लघु गुरु प्लुतम् ॥ ६० ॥

प्रत्येकं च द्रुतादीनां भवेत् पर्यायपञ्चकम् ।
अर्धमात्रं द्रुतं व्योम व्यञ्जनं बिन्दुकं तथा ॥ ६१ ॥

मातृ( त्रि )कं सरलं ह्रस्वं लघु व्यापकमित्यपि ।
द्विमात्रिकं कला वक्रं गुरु दीर्घमिति स्मृतम् ॥ ६२ ॥

सामोद्भवं प्लुतं दीप्तं तथा त्र्यंशं त्रिमात्रिकम् ।
द्रुते स्याद्देवता शम्भुर्लघुन्यद्रिपतेः सुता ॥ ६३ ॥

गौरा( री )शिवौ च गुरुणी( णि ) प्लुते ब्रह्मादयस्त्रयः ।
अनु द्रुतादिनिष्पन्नाँस्तालान् वक्ष्यामि साम्प्रतम् ॥ ६४ ॥

## ( अथ एकोत्तरशततालाः । )

चंच्चत्पुटः( चच्चत्पुटः )चाचपुटः षट्पिका(ता)पुत्रकस्तथा ।
संपकेष्टाक उत्(द्)घट्ट आदितालश्च दर्पणः ॥ ६५ ॥

चच्चरी सिंहलीलश्च कन्दर्पः सिंहविक्रम(मः) ।
श्रीरङ्गो रतिलीलश्च रङ्गतालो(लः)परिक्रमः ॥ ६६ ॥

प्रत्यङ्गो गजलीलश्च त्रिभिन्नो वीरविक्रमः ।
हंसलीलो वर्णभिन्नो राजचूडामणिस्ततः ॥ ६७ ॥

*रङ्गोद्योतो............रङ्गप्रदीपकः ।
हंसनादः सिंहनादो मल्लिकामोदसंज्ञकः ॥ ६८ ॥

---

*रङ्गोद्योतो राजतालः सिंहविक्रीडितस्तथा । वनमाली वर्णतालस्ततो रङ्गप्रदीपकः ॥
अयं पाठो मूले नास्ति । खण्डितो विद्यते स च सङ्गीतमकरन्दात् संशोध्य स्थापितः ।

भवेच्छरभलीलश्च रङ्गाभरण एव च ।
भवेत्तुरंगलीलः स्यात्ततः स्यात् सिंहनन्दनः ॥ ६९ ॥

जयश्रीर्विजयानन्दः प्रतितालो द्वितीयकः ।
मकरन्दः कीर्तितालो विजयो जयमङ्गलः ॥ ७० ॥

राजविद्याधरो मट्ट(ट्टो)जयतालः कुडुर्ककः ।
ततो निःसारक( निःसारुकः ) क्रीडा त्रिभङ्गिः कोकिलप्रियः ॥ ७१ ॥

श्रीकीर्तिर्बिन्दुमालि( ली )श्च ( च )समतालश्च नन्दनः ।
उदीक्षणो मड्डि(ट्टि)का (मण्ठिका) च ढेङ्किका वर्णमड्डि(ट्टि) (ण्ठि)का ॥ ७२ ॥

अभिनन्दोऽन्तरक्रीडा( डः ) मल( ल्ल )तालश्च दीपका:( कः ) ।
अनङ्गतालो विषमो नान्दीकुमुदकन्दुकः( काः ) ॥ ७३ ॥

एकताल(ली) चे(च)क(कं)कालश्चतुस्तालश्च(ली च) नौं(डों) (त्सौं)बिका ।
अभङ्गो राजवंकालस्तथैव लघुशेखरः ॥ ७४ ॥

प्रतापशेखरश्चान्यो जगज्झम्पश्चतुर्मुखः ।
झम्पाकं (कः) प्रतिमङ्कश्च तथा तालस्तृतीयकः ॥ ७५ ॥

तस्मादुपरि विज्ञेयो वसन्तो ललितो रतिः ।
करणाख्या(ख्यो) यतिश्चैव* राजनारायणस्ततः ॥ ७६ ॥

मदनश्चैव विज्ञेयः पार्वतीलोचनस्ततः ।
ततो गारुकि(गि)तालः स्यात्ततः श्रीनन्दनो जयः ॥ ७७ ॥

लीला विलोकितश्चान्यो ललितप्रिय एव वा ।
जनकश्चैव विज्ञेयो लक्ष्मीशो रागवर्धनः ॥ ७८ ॥

बद्धा(न्धा)पण इति ज्ञेयो(यः) तालस्यैकशतं बुधैः ।
चतुरश्रादितालानामिदानीं कथयाम्यहम् ॥ ७९ ॥

प्रस्तारसहित(तं) लक्ष्यं तद्भेदाश्च पृथग्विधाः ।

*‘षट्तालो वर्द्धनस्तथा । तालो वर्णयतिश्चैव’ अयं पाठो मूले भ्रष्टः । स क. सङ्गीतमकरन्दात् संशोध्य स्थापितः ।

॥ श्रीः ॥

[ १ ] ताले चच्चत्पुटे ज्ञेयं गुरुद्वन्द्वं लघुप्लुतम् ।

ऽ ऽ । 2 चच्चपु( त्पु )टम्( टः ) । [ ८ ]

[ २ ] गुरु ल( लै )घू गुरुश्चैव भवेच्चाचपुटाभिदे ( धे ) ॥ ८० ॥

ऽ । । ऽ चाचपुटम्( टः ) । [ ६ ]

[ ३ ] पलगा गलपाश्चैव षट्पितापुत्रकस्तथा ।

2 । ऽ ऽ । 2 षट्पितापुत्रकम्( कः ) । [ १२ ]

[ ४ ] मगणः स्यात् प्लुताद्यन्तं( न्तो ) संपक्वेष्टाकसंज्ञके ॥ ८१ ॥

2 ऽ ऽ ऽ 2 संपक्वेष्टम् ( ष्टः ) । [ १२ ]

[ ५ ] उद्घट्टे मगणस्त्वेकः,

ऽ ऽ ऽ उद्घट्टः । [ ६ ]

[ ६ ] आदितालो लघुः स्मृतः ।

। आदितालं ( लः ) । [ १ ]

[ ७ ] दर्पणे स्यात् द्रुतद्वन्द्वं गुरुश्चैकः प्रकीर्तितः ॥ ८२ ॥

० ० ऽ दर्पणं ( णः ) । [ ३ ]

[ ८ ] अष्टकृत्वस्तु चच्च( र्च )र्यां विरामान्तौ द्रुतो ( तौ ) लघुः ।

००'। ००'। ००'। ००'। ००'। ००'। ००'। ००'। चच्च( र्च ) री । [ १८ ]

[ ९ ] सिंहलीले विधातव्यं लघ्वाद्यन्त ( न्तं ) द्रुतत्रयम् ॥ ८३ ॥

। ० ० ० । सिंहलीला ( लः ) । [ ३½ ]

[ १० ] द्रुतद्वयं यकारश्च कन्दर्पः परिकीर्तितः ।

० ० । ऽ ऽ कन्दर्पं ( र्पः ) । [ ६ ]

[ ११ ] सिंहविक्रमताले स्युर्मगणो लः पला ( लौ ) गपौ ॥ ८४ ॥

ऽ ऽ ऽ । 2 । ऽ 2 सिंहविक्रमं ( मः ) । [ १६ ]

दक्षभागे प्रतितालं अन्ते लिखिता तालमात्रासंख्या ज्ञेया । वामभागे च तालक्रमाङ्को ज्ञेयः ।

[ १२ ] श्रीरङ्गसंज्ञके ताले सगणो लः ( ल )प्लुतौ मतौ ।
।। ऽ । 2 श्रीरङ्ग ( ङ्गः ) । [ ८ ]

[ १३ ] रतिलीले विधातव्यं लघुद्वन्द्वं गुरुद्वयम् ॥ ८५ ॥
।। ऽऽ रतिलीला ( लः ) । [ ६ ]

[ १४ ] चत्वारो रङ्गताले स्यु द्रु ( द्रु )ता गुरुस्त( र )तः परम् ।
० ० ० ० ऽ रङ्गतालं ( लः ) । [ ४ ]

[ १५ ] परिक्रमे द्रुतद्वन्द्वं यगणस्तदनन्तरम् ॥ ८६ ॥
० ० । ऽ ऽ परिक्रमं ( मः ) । [ ६ ]

[ १६ ] प्रत्यङ्गसंज्ञके ताले मगण ( णः ) स्याल्लघुद्वयम् ।
ऽऽऽ ।। प्रत्यङ्ग ( ङ्गः ) । [ ८ ]

[ १७ ] लचतुष्कं विरामान्तं गजलीले प्रकीर्तितम् ॥ ८७ ॥
।।।।' गजलीला ( लः ) [ ४½ ]

[ १८ ] लघुर्गुरुः प्लुतश्चैव त्रिभिन्ने परिकीर्तिता ( ताः ) ।
। ऽ 2 त्रिभिन्नं ( न्नः ) । [ ६ ]

[ १९ ] * ( वीरविक्रमताले तु ) लौ द्रुतौ गुरुरेव च ॥ ८८ ॥
।। ० ० ऽ वीरविक्रमं ( मः ) । [ ५ ]

[ २० ] सविरां —— ( रामं ) लघुद्वन्द्वं ताले स्याद्धंसलीलके ।
।।' हंसलीला ( लः ) [ २½ ]

[ २१ ] वर्णभिन्नाभि–( धे ) ताले द्रुतद्वन्द्वं लघुर्गुरुः ॥ ८९ ॥
० ० । ऽ वर्णभिन्नं ( न्नः ) [ ४ ]

[ २२ ] राजचूडामणौ ताले द्रुतौ नश्च द्रुतौ लगौ ।
० ० ।।। ० ० । ऽ राजचूडामणिः । [ ८ ]

[ २३ ] रङ्गोद्योतन( क )ताले तु मगणौ ( णो )लप्लुतावपि ॥ ९० ॥
ऽऽऽ । 2 रङ्गोद्योतकं ( कः ) । [ १० ]

* 'वीरविक्रमताले तु' इति मूले नास्ति ।

[ २४ ] लगौ ( गोलौ ) द्रुत ( तौ ) गलो ( लौ )पश्च राजताले* प्रकीर्तिता ( ताः )।
ऽ । । ० ऽ । 2 ( ? )
( गपौ द्रुतौ गलौ पश्च राजताले प्रकीर्तितः । इति सं. मकरन्दे )
( ऽ 2 ० ० ऽ । 2 ) राजतालं ( लः ) । [ १२ ]

[ २५ ] द्विर्ल (र्लः) पा (पो) गा (गो) लगौ पश्च सिंहविक्रीडिते लपौ ॥९१॥
। । 2 ऽ । ऽ 2 । 2 सिंहविक्रीडितं ( तः ) । [ १७ ]

[ २६ ] वेदद्रुता लौ द्रुतौ–ग ( च ) वनमाली ( लि )नि गस्तथा ।
० ० ० ० । । ० ० ऽ वनमालि ( ली ) । [ ७ ]

[ २७ ] गुरुर्लघू द्रुतौ गश्च वर्णे स्याच्चतुरस्र( श्र )के ॥ ९२ ॥
ऽ । । ० ० ऽ चतुरश्रवर्ण ( र्णः ) । [ ७ ]

[ २८ ] लघुर्द्रुतौ लघू गश्च त्र्यश्रवर्णे प्रकीर्तिताः ।
। ० ० । । ऽ त्र्यश्रवर्ण ( र्णः ) । [ ६ ]

[ २९ ] प्रतितूर्यं विरामान्तं मिश्राख्ये द्वादश द्रुताः ॥ ९३ ॥
प्लुतौ ( तौ ) गुरुद्वु ( द्वै ) तद्वन्द्वं गद्वयं ल ( लो ) गुरुस्तथा ।
००००' ००००' ००००' 2 ऽ ० ० ऽ ऽ । ऽ ( ? ) [ १९¾ ]

[ ३० ] रङ्गप्रदीपत ( ता )ले स्यात् तगणा ( णो ) गप्लुतौ यदि ॥ ९४ ॥
ऽ ऽ । ऽ 2 रङ्गप्रदीपः । [ १० ]

[ ३१ ] लप्लुतौ द्रुतयुग्मं पो हंसनादे प्रकीर्तिताः ।
। 2 ० ० 2 हंसनादं ( दः ) [ ८ ]

[ ३२ ] यगणो ल्लो (·लो ) गुरुश्चैव सिंहनादे निरूपिताः ॥ ९५ ॥
। ऽ ऽ । ऽ सिंहनादं (दः) । [ ८ ]

[ ३३ ] ताले स्यान्मल्लिकामोदे लद्वयं खचतुष्टयम् ।
। । ० ० ० ० मल्लिकामोदं ( दः ) । [ ४ ]

---

* ( १ ) राजतालो गपौ दौ च गलौ प्लुतः । सं० रत्नाकरः ता. अ. श्लो. २६८ ॥ ( २ ) राजताले क्रमात्प्रोक्ता गपौ दौ गलपास्तथा । सं० चिन्तामणिः ॥ इति १२ मात्रात्मकः सर्वसंमतोऽयं राजतालः ।

[ ३४ ] लघुद्रु( र्द्रु )तचतुष्कं लौ स्यातां शरभलीलके ॥ ९६ ॥
। ० ० ० ० । । शरभलीलः । [ ५ ]

[ ३५ ] तगणाल्लप्लुतौ कार्यौ रङ्गाभरणसंज्ञके ।
ऽ ऽ । । 2 रङ्गाभरणं ( णः ) । [ ९ ]

[ ३६ ] तुरङ्गलीले ताले स्या ( स्याद् ) द्रुतद्वन्द्वं लघुस्ततः ॥ ९७ ॥
० ० । तुरङ्गलीलः । [ २ ]

[ ३७ ] तपो ( पौ ) लगौ द्रुतौ गौ लः पलपा गश्च लद्वयम् ।
*निःशब्दं लचतुष्कं च ताले स्यात् सिंहनन्दने ॥ ९८ ॥
ऽ ऽ । 2 । ऽ ० ० ऽ ऽ । 2 । 2 ऽ । । + सिंहनन्दनं (नः) । [ ३२ ]

[ ३८ ] ग ( गो ) लौ ल ( लो )न्त्यगुरुश्चैको जयश्रीरिति गण्यते ।
ऽ । । । ऽ जयश्री ( श्रीः ) । [ ७ ]

[ ३९ ] भवेयुर्विजयानन्दे लद्वत् ( द्वयं ) गुरवस्त्रयः ॥ ९९ ॥
। । ऽ ऽ ऽ विजयानन्दं ( न्दः ) । [ ८ ]

[ ४० ] लो द्रुतौ प्रतिताले स्यात्
। ० ० प्रतितालं ( लः ) । [ २ ]

[ ४१ ] द्रुतौ नश्च द्वितीयके ।
० ० । । । द्वितीयकं ( कः ) । [ ४ ]

[ ४२ ] मकरन्दे द्रुतद्वन्द्वं लघुत्रयमथो गुरू ॥ १०० ॥
० ० । । । ऽ ऽ मकरन्दं ( न्दः ) । [ ८ ]

[ ४३ ] गलौ पगौ लपौ श्चे ( चै )त्र कीर्तिताले प्रकीर्तिता ( ताः ) ।
ऽ । 2 ऽ । 2 कीर्तितालं ( लः ) । [ १२ ]

[ ४४ ] प्लुतो गश्च प्लुतो लश्च ताले विजयसंज्ञके ॥ १०१ ॥
2 ऽ 2 । विजयतालं ( लः ) । [ ९ ]

---

* निःशब्दं लचतुष्कं नाम चत्वारो लघवः अशब्दाः + ( लचतुष्कं यावन्न विरामः । ) अथवा सङ्गीतरत्नाकरे च ४ ×इति ' चतुर्लघु निःशब्दम् ' इत्यर्थकः सङ्केतो द्योतितस्तेन उपरिनिर्दिष्टोऽर्थः स्फुटः ।

[ ४५ ] सकारश्च सकारश्च जयमङ्गलनामि ( म )नि ।
। । ऽ । । ऽ जयमङ्गलं ( लः ) [ ८ ]

[ ४६ ] लघुश्च गो द्रुतौ ताले राजविद्याधराभिधे ॥ १०२ ॥
। ऽ ० ० राजविद्याधरं ( रः ) । [ ४ ]

[ ४७ ] सकारान्मड्डु( ट्ट )ताले स्यात् कल्पितं लचतुष्टयम् ।
। । ऽ । । । । मड्डु[ ट्ट ]तालं ( लः ) । [ ८ ]

[ ४८ ] जगणो लौ द्रुतौ पश्च जयताले प्रकीर्तिता ( ताः ) ॥ १०३ ॥
। ऽ । । । ० ० 2 जयतालं ( लः ) [ १० ]

[ ४९ ] द्रुतद्वन्द्वं लघुद्वन्द्वं भवेत्ताले हुडुक्तके ।*
० ० । । हुडुक्ततालं ( लः ) । [ ३ ]

[ ५० ] लघुद्वयं विरामान्तं ताले निःसारुके भवेत् ॥ १०४ ॥
। ।' निःसारुकं ( कः ) । [ २३/४ ]

[ ५१ ] द्रुतद्वयं विरामान्तं क्रीडाताले प्रकीर्तितम् ।
० ०' क्रीडातालं ( लः ) । । [ १३/४ ]

[ ५२ ] लघुद्वन्द्वं गुरुद्वन्द्वं त्रिभङ्गिमि( रि )ति कथ्यते ॥ १०५ ॥
। । ऽ ऽ त्रिभङ्गितालं ( लः ) । [ ६ ]

[ ५३ ] कोकुल ( कोकिल ) प्रियताले स्युः क्रमात् गुरुलघुप्लुताः ।
ऽ । 2 कोकु ( कि )लप्रियतालं ( लः ) । [ ६ ]

[ ५४ ] श्रीकीर्तिसंज्ञके ताले गुरुद्वन्द्वं लघुद्वयम् ॥ १०६ ॥
ऽ ऽ । । श्रीकीर्तितालं ( लः ) । [ ६ ]

[ ५५ ] चत्वारो बिन्दवो गुर्वोर्मध्ये स्युर्बिन्दुमालिनि ।
ऽ ० ० ० ० ऽ बिन्दुमालिनी (लीं) । [ ६ ]

[ ५६ ] समताले लघुद्वन्द्वं विरामान्त(न्तं) द्रुतद्वयम् ॥ १०७ ॥
। । ० (। । ० ०') समतालं (लः) । [ ३३/४ ]

---

* असौ कुडुक्काऽभिधः । कुडुक्कः इत्यपरनामा वा ।

[ ५७ ] लौ (लौ) द्रुतौ च प्लुतश्चान्ते ताले स्यान्नन्दमाभिदे (धे) ।
। । ० ० 2 नन्दनतालं (लः) । [ ६ ]

[ ५८ ] *दक्षिणे स्याल्लघुद्वन्द्वं गुरुरेकस्ततः परम् ॥ १०८ ॥
। । ऽ दक्षिणतालं (लः) । [ ४ ]

[ ५९ ] मड्डि (ट्टि) (ष्ठि)कायां विधातव्या गुरुर्बिन्दुः( न्दू ) प्लुतः क्रमात् ।
ऽ ० ० 2 मड्डिकातालं (लः) । [ ६ ]

[ ६० ] ढोक्किका जगणो न स्यात्( ढेङ्किका रगणेन स्यात् )केषांचित् सैव योजना
॥ १०९ ॥

ऽ । ऽ ढो( ढे )ङ्किकातालं (लः) । [ ५ ]

[ ६१ ] लौ बिन्दू लश्च बिन्दु ( न्दू )श्च (च) विज्ञेया वर्णमड्डि(ट्टि)का ।
। । ० ० । ० ० वर्णमड्डि [ ट्टि ] कातालं (लः) । [ ५ ]

[ ६२ ] लद्वन्द्वं बिन्दुयुग्मं च गुरुश्चैवाभिनन्दने ॥ ११० ॥
। । ० ० ऽ अभिनन्दनतालं (लः) । [ ५ ]

[ ६३ ] विधातव्या ऽन्तरक्रीडा विरामान्त( न्तं ) द्रुतत्रयम् ।
० ० ०' अन्तरक्रीडः । [ १$\frac{३}{४}$ ]

[ ६४ ] मल्लताले ऽब्धिलघवो विरामान्तद्रुतत्रयम् ॥ १११ ॥
। । । । ० ०'( ० ० ०' )मल्लतालं (लः) [ ५$\frac{३}{४}$ ]

[ ६५ ] द्रुतद्वयं लघुद्वन्द्वं गुरुद्वन्द्वं च दीपके ।
० ० । । ऽ ऽ दीपकतालं (लः) । [ ७ ]

[ ६६ ] लघुप्लुतौ सकारश्च स्यादनङ्गाभिधे पुनः ॥ ११२ ॥
। 2 । । ऽ अनङ्गतालं (लः) । [ ८ ]

[ ६७ ] वेदद्रुता विरामान्ता द्वौ वारौ ( द्विवारं ) विषमे मताः ।
० ० ० ०'( ० ० ० ०' ० ० ० ०' ) विषमतालं (लः) । [ ४$\frac{१}{२}$ ]

[ ६८ ] श्रन्दि( नान्दी )ताले समुद्दिष्टा लघु बिं(बिं)न्दू लघु( घू ) गुरुः (रू) ।
॥ ११३ ॥

* उद्दीक्षणतालापरपर्यायोऽयम् ।

। ० ० । ऽ ऽ श्रन्दि ( नान्दी )तालं ( लः ) ।

( । ० ० । । ऽ ऽ नान्दीतालः । ) [ ८ ]

[ ६९ ] कुमुन्द( द ) ( मुकुन्द ? ) संज्ञके ताले लघु बि( र्बि )न्दू लघुर्गुरुः ।$

। ० ० । ऽ कुमुदतालं ( लः ) । [ ५ ]

[ ७० ] लघुद्वन्द्वं सकारेण कन्दुकः परिकीर्तितः ॥ ११४ ॥

। । । । ऽ कन्दुकतालं ( लः ) । [ ६ ]

[ ७१ ] एकेनैव द्रुतेन स्यादेकताले( ली )ति संज्ञया ।

० एकतालं ( लः ) । ( एकतालीतालः ) [ ½ ]

चतुर्विध(धः) स्यात् कङ्कालः †खण्डः पूर्णः समा[मोऽ]समः ॥ ११५ ॥

[ ७२ ] पूर्णो द्रुतचतुष्केण गुरुणा लघुना क्रमात् ।

० ० ० ० ऽ । पूर्णतालं( लः ) । [ ५ ]

[ ७३ ] चतुस्ताले गुरुः पूर्वं ततो बिन्दुत्रयं भवेत् ॥ ११६ ॥

ऽ । ( ? ) ० ० ० ( ऽ ० ० ० ) चतुस्तालं ( लः ) । [ ३½ ]

[ ७४ ] विर( रा )मान्तौ लघु( लघू ) द्विश्चेत् §सोंबिकीति प्रकीर्तिता । [ ? ]

। ।' । ।' त्सों ( सों ) ( डों )बिकतालं ( लः ) । [ ४½ ]

*अमुमेव वदन्त्यन्ये तालं बन्धा( द्धा )पणाभिधम् ॥ ११७ ॥

[ ७५ ] अभङ्गताले कर्तव्या( व्यं ) लघ—त्रे ‡ त्रिमात्रिका( कम् ) ।

। । । 2 अभङ्गतालं ( लः ) । [ ६ ]

$ अयमेव कुमुन्द इति नन्दी ( भरतार्णवकर्ता ) ।
मुकुन्दसंज्ञिके ताले लघुर्बिन्दुर्लघुर्गुरुः । सं० मकरन्दे ।

† खण्डसमाऽसमेति तालत्रयाणां लक्षणानि अत्र न दत्तानि यतस्त्रयो भेदा न परिगणिताः ।

§ असौ मूले ( मलयालम् लिप्यां ) डों अथवा सों इति पठ्यते ।
सङ्गीतरत्नाकरादिषु ग्रन्थेषु 'डोम्बुली' इत्यपरनामासौ लक्षणेन परिचीयते ।

* अमुमेव वदन्त्यन्ये तालं वर्धापणाभिधम् इति पाठः साधुः ।
ताले वर्धापणे ज्ञेयं लघूनां च चतुष्टयम् ।
। । । । वर्धापणतालः । ( सुधाकलशे )

‡ मूलपुस्तके ( मलयालम् लिप्यां ) 'लघण्डेत्रे' इति पाठो दृश्यते तत्र 'लघुन्यन्ते' इति चेत् साधुपाठः ।

[ ७६ ] ज(र)गणाद् बिन्दुयुग्मेण(न) राजवंला(ङ्का)ल इष्यते ।
ऽ । ऽ ० ० राजवंका(ङ्का)लतालं (लः) । [ ६ ]

[ ७७ ] एकेन स्स(स)विरामेण लघुना लघुशेखरः ॥ ११८ ॥
।' लघुशेखरतालं (लः) । [ १¼ ]

[ ७८ ] प्रतापशेखरे त्र्यंशा(शो) (त्र्यङ्गाद्) विरामान्तद्रुतद्वयम् ।
2 ० ०' प्रतापशेखरतालं (लः) । [ ४¼ ]

[ ७९ ] जगज्झम्पे गुरुश्चैको विरामान्तद्रुतद्वयम् ॥ ११९ ॥
।(ऽ) ० ०' जगज्झम्पतालं (लः) । [ ३¼ ]

[ ८० ] चतुम्मु(र्मु)खाभिदे(धे) ताले जगणानन्तरः प्लुतः ।
। ऽ । 2 चतुर्मुखतालं (लः) । [ ७ ]
त्रिमात्रिकः पुनः कैश्चिदयमेव प्रकीर्तितः ॥ १२० ॥
2 चतुर्मुखतालं(लः) । [ ३ ]

[ ८१ ] व्योमद्वयं विरामान्तं लश्च झंभा(झम्पा)भिधे भवेत् ।
० ०'(० ०' ।) झम्पतालं (लः) । [ २¼ ]

[ ८२ ] सगणो भगणो *वापि प्रतिमड्डे(ण्ठे) बुधैःस्मृतः ॥ १२१ ॥
। । ऽ ऽ । । प्रतिमट्ट(ण्ठ) तालं (लः) । [ ८ ]

[ ८३ ] तृतीयताले बिन्दौ (न्दुः) स्याद् विरामान्तं द्रुतद्वयम् ।
। ० ० ०'(?) (० ० ०') तृतीयतालं (लः) । [ १¾ ]

[ ८४ ] ‡ वसन्तताले कर्तव्यौ ग(न) गणो न(म) गणस्ततः ॥ १२२ ॥
। । । ऽ ऽ ऽ वसन्ततालं (लः) । [ ९ ]

[ ८५ ] ताले ललितसंज्ञे स्याद् द्रुतद्वन्द्वं लघुर्गुरू (रुः) ।
० ० । ऽ ऽ (० ० । ऽ) ललिततालं (लः) । [ ६ ]. [ ४ ] ?

---

* अत्र 'वापि' इत्यस्य 'चापि' इत्यर्थः स्वीकृतः । अतः सगणश्च भगणश्च इति पाठो बोध्यो ग्रन्थान्तरप्रमाणात् ।

‡ मूलपुस्तके अस्य अस्पष्टानि अक्षराणि ।

[ ८६ ] रतिताले लघुः कार्या( र्य ) त( स्त )तश्चैको गुरुः स्मृतः ॥ १२३ ॥
। ऽ रतितालं ( लः ) । [ ३ ]

[ ८७ ] ताले करणयत्याख्ये ज्ञेयं बिन्दुचतुष्टयम् ।
० ० ० ० करणयतितालं ( लः ) । [ २ ]

[ ८८ ] षट्ताले( ल )संज्ञके ताले बिन्दुषट्कं निरूप्यते ॥ १२४ ॥
० ० ० ० ० ० षट्तालं ( लः ) । [ ३ ]

[ ८९ ] खण्डने ( वर्द्धने ) बिन्दुयुगलं ततः कायो ( र्यो ) लघुः प्लुतः ।
० ० । 2 बन्धनतालं ( लः ) ( वर्धनतालः ) । [ ५ ]

[ ९० ] वर्णयत्यभिधे ताले लघुद्वन्द्वं प्लुतद्वयम् ॥ १२५ ॥
। । 2 2 वर्णयतितालं ( लः ) । [ ८ ]

[ ९१ ] राजनारायणे बिन्दुद्विती( त )यं जगणो गुरुः । [ ? ]
० ० । ऽ । ऽ ऽ ( ऽ ) राजनारायणतालं ( लः ) । [ ९ ] [ ८ ]

[ ९२ ] द्रुतद्वन्द्वं गुरुश्चैको मदने परिकीर्तितः ॥ १२६ ॥
० ० ऽ मदनतालं ( लः ) । [ ३ ]

[ ९३ ] पार्वतीलोचने वृत्तौ( त्ते ) लौ द्रुतौ तनभाः क्रमात् ।
० ० । । ० ० ऽ ऽ । । । । ऽ । । पार्वतीलोचनं ( नः ) । [ १६ ]

अथवा मगणो लश्च गुरुद्वन्द्वं द्रुतद्वयम् ॥ १२७ ॥
ऽ ऽ ऽ । ऽ ऽ ० ० पार्वतीलोचनः [ १२ ]

[ ९४ ] शरा(गा)रुकिः कथ्यते प्राज्ञै वि(र्वि)रामान्तश्चतुर्द्रुतं ( तः ) ।
˙० ० ० ०' शा( गा )रुकितालं ( लः ) । [ २½ ]

[ ९५ ] श्रीनन्दनस्य तालस्य म( भ )गणात् प्लुत इष्यते ॥ १२८ ॥
ऽ । । 2 श्रीनन्दनतालं ( लः ) । [ ७ ]

[ ९६ ] जये स्याज्जगणो लश्च बिन्दुयुग्मं प्लुतस्तथा ।
। ऽ । । ० ० 2 †जयतालं ( लः ) । [ ९ ]

---

† जयतालो द्विः पठितः ( तालक्रमाङ्के ४८ तथा ९६ ) परं उभयत्र मात्राभेदाद् भिन्नः ।

[ ९७ ] बिन्दुर्लघुः प्लुतश्चैव लीलाताले प्रकीर्तितः ॥ १२९ ॥
०।2 लीलातालं (लः)। [ ४१/२ ]

[ ९८ ] विलोकिते लघुर्वत्र(क्रः) शून्ययुग्मं ततः प्लुतः।
।ऽ०० 2 विलोकितं (तः)। [ ७ ]

[ ९९ ] ललितप्रिये(य)ताले स्यात् सगणोऽनन्तरौ लग (गौ) ॥ १३० ॥
।।ऽ।ऽ ललितप्रियतालं (लः)। [ ७ ]

[ १०० ] जनकाभिधताले स्यान् नयसेभ्यः परं गुरुः।
।।। ।ऽऽ ।।ऽऽ जनकतालं (लः)। [ १४ ]

[ १०१ ] बिन्दुद्वयं विरामान्तं लक्ष्मीशे लौ प्लुतस्तत (तः) ॥ १३१ ॥
००'।। 2 लक्ष्मीशेखर(लक्ष्मीश) तालं (लः)। [ ६३/४ ]
बिन्दुद्वयं विरामान्तं खप्लुतौ रागवर्धने।
००' ० 2 रागवर्धनतालं (लः)। [ ४३/४ ]
बद्धापणस्तु कथितो लघो(घ्वो)रूर्ध्वं प्लुतं लघु ॥ १३२ ॥
।। 2 । बद्धापणतालं (लः)। [ ६ ]
नेति केचित् पक्षं (केषांचित् पक्षः)।
लघुद्व(द्वौ)तौलघू गश्च त्र्यश्रवर्णे प्रकीर्तिताः।
। ०० ।।ऽ त्र्यश्रवर्णतालं (लः)। [ ६ ]
प्रतितुर्यं विरामान्ता मिश्राख्ये द्वाद्वश द्रुताः ॥ १३३ ॥
प्लुतौ गुरू द्रुतद्वन्द्वं गद्वयं ल (लो) गुरुस्ततः।
(००') ००' ००' ००'००'००' 22 ऽऽ ०० ऽऽ।ऽ
(००००' ००००' ००००' 22 ऽऽ ०० ऽऽ।ऽ) (?)
मिश्रवर्णतालं (लः)।

भकारान्तो(न्ते) गुरुद्वन्द्वं निश्शब्दमनु वा भवेत् (?) ॥ १३४ ॥
ऽ।। ऽऽ (+) मल्लुतालं (लः)।
अथवा नगणो गश्च लघुश्चैक (कः) प्रकीर्तिता (तः)।
।।।ऽ। मल्लुतालं (लः)।

केचित्तु वक्रयोर्मध्ये बिन्दुयुग्मं प्रचक्षसे (ते) ॥ १३५ ॥
ऽ ० ० ऽ नन्दनतालं (लः) ।
विरामादि रयुग्मान्तं लद्वयं चेति केचन ।
। । (।`।') ० ० द्वितीयमङ्गिका ।
अन्यो लघ्वादि गु( र्गु )र्वा( र्वे )न्त्याद् भवेद् बिन्दुचतुष्टयात् ।
॥ १३६
। ० ० ० ० ऽ
द्रुतद्वयं गुरू खण्डे
० ० ऽ ऽ खण्डकङ्कालं (लः) ।
गुरुद्वन्द्वं लघुस्समे ।
ऽ ऽ । समकङ्कालकालं (तालः)
एको लघुर्गुरुद्वन्द्वं कङ्काले विषमे भवेत् ॥ १३७ ॥
। ऽ ऽ विषमकङ्कालतालं (लः)
अथ निःसारुकं (कः) कैश्चित् अयमेवाभिधीयते ।
निस्सारुकं (कः) ।
अमुमेव वदन्त्यन्ये तालं बद्धापणाभिदं (धम्) ॥ १३८ ॥
त्रिमात्रिकं (कः) पुनः कैश्चित् अयमेव प्रकीर्तितः ।
चतुर्मुखतालं (लः)

॥ श्रीः ॥

॥ श्रीः ॥

मातृकाताल:,* कन्दुकताल:, आर्याताल:, कलहंसताल:,

चक्रवालताल:, चतुष्पन्दि(दी)ताल:, वृत्तताल:, हयलीलाताल:,

गौन्धिताल:, विजयताल:, कालार्णवताल:, वस्तुताल:,

षपती(षट्पदी)ताल:, गद्यताल:, हरिपूर्णताल:,

ध्वनिविल(ला)सताल:, पञ्चताल:, स्वराङ्कताल:,

अङ्कध्वनिताल:, दण्डताल:, शरभलीलाताल:, आमन्ध(ण्ड)नताल:,

नन्दनताल:, द्वी(दी)पकताल:, क्रौञ्चपदताल:, सलीलाताल:,

हयमालबन्धनि (भयमालापध्वनि)ताल:, हंसपदताल:,

द्राविणादिताल:, ढेङ्किताल:, चर्चरीताल:, जयताल:,

श्रीलम्बताल:, कैलाटताल:, सिंहपदताल:, द्विनेमताल:,

बन्धनि(वर्द्धनी)ताल:, जयश्रीताल:, वर्धमानताल:,

रथ्या(थ्य)पदताल:, बि(वि)भ्र(म)ताल:, दाहताल:,

पञ्चभागताल:, ललिता(त)ताल:, श्रीनन्दनताल:,

श्रीखण्डनताल:, करणाख्यताल:, गलबन्धताल:,

पाक(ट)ताल:, पदगानताल:, मिश्रताल:, चित्रताल:,

स्वरताल:, पाट्मताल: (?) अ(अङ्)कवा(चा)रिणि(णी)ताल:,

त्रिपदि(दी)ताल:, हंसलीलाताल:, दोलहरिताल:,

चरितताल:, धवलताल:, श्री(त्रि)भङ्गिताल:,

रणरङ्गताल:, सिंहविक्रान्तताल:, स्वरपूर्वताल:,

शुभताल:, पाण्डुपातताल:, अभिनन्दनताल:,

*मूले सर्वत्र 'तालं' इति शब्दप्रयोग:। स च तद्देशीयोच्चारणपद्धत्या कृत:। दक्षिणप्रदेशे उच्चारणे देशाचारस्तथा वर्तते परं सर्वसंमत: 'ताल:' इति पुलिङ्गे वर्तमान: रूढ: शब्दप्रयोगोऽत्र रक्षित:।

श्रीविलासतालः, श्रीरङ्गवर्धनतालः, शुकशारिकातालः,
बन्धापणतालः, कदम्बिनीतालः, उन्मत्तरागतालः,
नागकदम्बतालः, मनोरमतालः, चतुर्मुखतालः,
चतुरङ्गतालः, रथ्य(थ्या)तालः, लम्बतालः, अण्डतालः,
रूपकतालः, मड्डु(ट्ट)तालः, पडिमड्डु(ट्ट)तालः, एकतालः,
स्वरप्रबन्धतालः, अनेकतालः, स्तवमञ्जरीतालः,
सिंहलीलातालः, मिश्रस्वरान्ध(र्द्ध)(र्थ)तालः, शुद्धस्वरार्द्ध(र्थ)तालः,
दाहन्धेयतालः, मञ्जुतालः, द्विगुणतालः, प्रमोदतालः,
स्वरसन्दोहतालः, प्रतापमङ्गलतालः, जयमङ्गलाचारतालः,
सममात्रतालः, नम्रतालः, पा(प)रमतालः, पत्रतालः ।

॥ इत्येकोत्तरशतम् ॥

॥ श्रीः ॥

॥ श्रीः ॥

मातृका कन्दुतालश्च आर्या च कलहंसकम् ( कः ) ।
चक्रवाल च( श्च )तुष्पद्यां( दी )वृत्तं च हयलीलकम् ( कः ) ॥ १ ॥

गोन्धिश्च विजया( य )श्चैव कालार्णवं च ( वश्च ) वस्तु च ।
षट्पदी गद्यतालश्च हमि( रि )पूर्वकमे( ए )व च ॥ २ ॥

ध्वनिविलासे ( सः ) पञ्चतालं ( लः ) स्वराङ्कोऽङ्कध्वनिस्तथा ।
दण्डश्शरभलीला—( च ) आमण्डन( नो ) हि नन्दने ( नः ) ॥ ३ ॥

द्विपदस्तु क्रौञ्चपद( दः ) सलीलातालमेव च ।
हयमालाबन्धनि( भयमालापध्वनि ? )स्तु हंसपादं( द )स्तथैव च ॥ ४ ॥

द्राविणादि त( स्त )था ढो( ढे )ङ्की किन्वे ( वे )चरी( चच्चरी )तालमे( ए )व च ।
जयः श्रीलम्बतालश्च कैलाभ( ट )स्तु तथैव च ॥ ५ ॥

सिंहपाद( दो )न्द्वि( द्वि ) नेमस्तु वर्द्धनीतालमे( ए )व च ।
जयश्री व( र्व )र्द्धमानं च (नश्च) रथ्य( थ्या )पादं(द) त(स्त)थैव च ॥६॥

—( वि )भ्रम( मो )न्दा( दा )हतालश्च ( श्च ) पञ्चभागस्तथैव च ।
ललितः श्रीनन्दतालं ( लः ) श्रीखण्डं ( ण्डः ) करमा( णा )ख्यकम् ( कः ) ॥ ७ ॥

गलवर्द्धं (बन्धः) पाटतालं (लः) पदगानं त( नस्त )थैव च ।
मिश्रं( श्र )श्चित्रकतालश्च स्वर( रः ) पाड( ट )मतालकम् ( कः ) ॥ ८ ॥

अङ्कचारु( रि )णि( णी )तालं ( ल )श्च त्रिपदिस्तु( दी तु ) तथैव च ।
हंसलीला दोहलरी (?) चञ्चरित(चरितो)न्ध(ध)वलाख्यकम् (कः) ॥९॥

त्रिभङ्गि( ङ्गी )रणराग( रङ्ग )श्च सिंहविक्रान्ततालकम् ( कः ) ।
स्वरपूर्वः शुभः पाण्डुरभिनन्दनतालकम् ( कः ) ॥ १० ॥

